उलू॑कयातुं शुशुलू॒कया॑तुं ज॒हि श्वया॑तुमु॒त कोक॑यातुम् ।
सु॒प॒र्णया॑तुमु॒त गृध्र॑यातुं दृ॒षदे॑व॒ प्र मृ॑ण॒ रक्ष॑ इन्द्र ॥ २२ ॥

उलूकयातुम् । उलूकादयो रात्रि-चराः प्राणिनां[1] हिंसका[2] येषां हिंसासाधनानि भवन्ति ते तथोक्ता इत्येतान् । दृषदुपलाभ्यामिव[3] बीजादिकम् । सञ्चूर्णयेति[4] ।

मा नो॒ रक्षो॑ अ॒भि न॑ड्यातु॒माव॑ता॒मपो॑च्छतु मिथु॒ना या कि॑मी॒दिना॑ ।
पृ॒थि॒वी नः॒ पार्थि॑वात्पा॒त्वंह॑सो॒ऽन्तरि॑क्षं दि॒व्यात्पा॑त्व॒स्मान् ॥ २३ ॥

मा नो रक्षः[5] । रक्षो[6] रक्षितव्यमित्यस्मादित्युक्तम् । अस्मान् । अभिव्याप्नोतु[7] । हिंसावतां[8] बलम् । पृथक्[9] करोतु । मिथुनानि[10] । किमिदं किमिदमित्याचरन्ति[11] । राक्षसानां तानिन्द्रोऽपोहतु[12] । पृथिवी[13] न[14] इति स्पष्टम्[15] ।

---

१. ०ना A. ०नो M.

२. हिसा० A. ३. दृवदु० A.

४. VM. explains the stanza briefly and not word by word. Sy. explains this stanza in the following manner:—
उलूकयातुम् । उलूकैः परिकरभूतैः सह यातयति हिनस्तीति याति गच्छतीति वोलूकयातुः। यद्वा—उलूकरूपी यातीत्युलूकयातुः । हे इन्द्र ! तादृशं राक्षसं जहि विनाशय। तथा च बृहद्देवतायाम् उक्तम्—'उलूकयातु जह्येतान् नानारूपान् निशाचरान् । स्त्रीपुंरूपांश्च तिर्यञ्चो जिघांसूनिन्द्र मे जहि ॥' (BD. 6. 32.) एवमुत्तरत्रापि योज्यम्। शुशुलूकयातुम्, उलूका द्विविधाः बृहदुलूका अल्पोलूकाश्चेति । तत्रोलूकयातुमिति बृहदुलूकाभिप्रायेणोक्तम् । शिशुरल्प उलूकः शिशुलूकः, तद्रूपेण वर्तमानं राक्षसं श्वयातुं श्वरूपेण वर्तमानं राक्षसम् । उतापि च कोकयातुम् । कोकश्चक्रवाकः, तद्रूपेण वर्तमानं राक्षसम् । सुपर्णयातुम्, सुपर्णः श्येनः तदाकारं यातुधानमुतापि च गृध्रयातुं गृध्ररूपं च यातुधानमेतान् सर्वान् नानाकारान् हे इन्द्र जहि । किं बहुना ? दृषदेव पाषाणेनेव वज्रेण रक्षो राक्षसमात्रं प्र मृण मारय ।

५. राक्षसजातिः Sy.

६. रक्षोदि० A. रक्षोजातिः Sy.

७. नट्—नशतेर्व्याप्तिकर्मणो लुङि 'मन्त्रे घस०' च्लेर्लुक् । 'न माङ्योगे' इत्यडभावः Sy.

८. यातनावतां राक्षसानाम् Sy.

९. उषा अपि विनाशयतु अपवर्जयतु Sy.

१०. मिथुनानि स्त्रीपुंरूपाणि युगलानि Sy.

११. ०मत्या० A. किमीदिना किमीदिनानि किमिदं किमिदमिति जिघांसया वर्तमानानि भवन्ति Sy.

१२. बोह० A.

१३. अपि च पृथिवी प्रथितेयं भूमिश्च Sy.

१४. अस्मान् Sy.

१५. VM. ignores मा । पार्थिवात् । पातु । अंहसा । अन्तरिक्षम् । दिव्यात् । पातु । अस्मान् ॥ पार्थिवात् पृथिव्या अन्तरिक्षस्य सम्बन्धिनोंऽहसः पापात् पातु रक्षतु । अन्तरिक्षं च दिव्यात् दिवि भवात् पापादस्मान् पातु रक्षतु Sy.

इन्द्रं जहि पुमांसं यातुधानमुत स्त्रियं मायया शाशदानाम् ।
विग्रीवासो मूरदेवा ऋदन्तु मा ते दृशन्त्सूर्यमुच्चरन्तम् ॥ २४ ॥

इन्द्र जहि । इन्द्र ! जहि । पुमांसम् । यातुधानम् । अपि च । स्त्रियम्, तेन सहागच्छन्तीम् । माययां । प्रजाः पीडयन्तीम् । विगतश्रीवा । मूरदेवा मरणक्रीडा राक्षसाः । ऋदितिर्गमनकर्मा नाशकर्मा वा गच्छन्तु नश्यन्तु वेति । मा । ते । द्राक्षुः । सूर्यम् । उद्यन्तम् ।

प्रति चक्ष्व वि चक्ष्वेन्द्रश्च सोम जागृतम् ।
रक्षोभ्यो वधमस्यतमशनिं यातुमद्भ्यः ॥ २५ ॥

प्रति चक्ष्व । प्रतिपश्य । विपश्य । इन्द्रः । त्वम् । च । सोम ! युवाम् । जागरणं कुरुतः । रक्षोभ्यः । हन्तारम् । अस्यतम् । अशनिम् । हिंसावद्भ्य इति ।

[ इति सप्तमं मण्डलं समाप्तम् ]

---

१. इन्द्रः सहि A.

२. मारय Sy.

३. पुंरूपधारिणम् Sy.

४. यातुधानम् Sy.

५. राक्षसीं च जहि Sy.

६. वञ्चनया Sy.

७. हिंसन्तीम् Sy.

८. श्रीर्वा० M. ग्रीवाः is suggested for ०श्रीवा ॥ विच्छिन्नग्रीवाः सन्तः Sy.

९. मारणक्रीडाः Sy.

१०. नाशकर्मा is missing in A.

११. तथाविधा राक्षसाः Sy.

१२. आदित्यम् Sy.

१३. उपाकरणोत्सर्जनयोर्मण्डलाद्यन्तहोमे 'प्रति चक्ष्व' इत्येषा । सूत्रितञ्च—'यो नः स्वो अरणः प्रति चक्ष्व' (ĀGS. 3.5.7.) इति Sy.

१४. प्रत्येकं पश्य राक्षसान् Sy.

१५. विपश्च A. विविधं पश्य यथास्मान्न बाधेरंस्तथा पश्येत्यर्थः Sy.

१६ युवां संहतौ Sy.

१७. कुरुतम् is suggested for कुरुतः ॥ जागरूकौ रक्षोवधोद्युक्तौ भवतम् Sy.

१८. राक्षसेभ्यः Sy.

१९. अशनिरूपम् Sy.

२०. क्षिपतम् Sy.

२१. आयुधम् Sy.

२२. Supplied by the Editor.



